पञ्चैको माषः। ते माषाः षोडशैकः सुवर्णः। ते सुवर्णाश्चत्वारः पलमिति संज्ञाः कथिता इति। पञ्च वापि पलं प्रकीर्तितं नारदादिभिः। तत्र स्थूलैस्त्रिभिर्यवैः कृष्णलपरिकल्पनायां व्यावहारिकनिष्कस्य षोडशांशः कृष्णलो भवति। तैः पञ्चभिर्माषः। माषैः षोडशभिः सुवर्णः। सच व्यावहारिकैः पञ्चभिर्निष्कैरेकः सुवर्णो भवति। ते चत्वारः पलमिति। निष्काणां विंशतिः पलम्। यदा तु सूक्ष्मैस्त्रिभिर्यवैः कृष्णलः परिकल्प्यते तदा व्यावहारिकनिष्कस्य द्वात्रिंशत्तमो भागः कृष्णलो भवति। तस्मिन्पक्षे सुवर्णः सार्धं निष्कद्वयं भवति। पलं च दशनिष्कम्। यदा तु मध्यमयवैः कृष्णलपरिकल्पना तदा निष्कस्य विंशतितमो भागः कृष्णलः, सुवर्णश्चतुर्निष्कः, षोडशनिष्कं पलम्। एवं पञ्चसुवर्णं पलमिति। पक्षे विंशतिनिष्कं पलम्। एवमन्यदपि निष्कस्य चत्वारिंशो भागः कृष्णलः द्विनिष्कः सुवर्णोऽष्टनिष्कं पलमित्यादिलोकव्यवहारानुसारेणास्मादेव सूत्रादूहनीयम्॥ ३६२॥ ३६३॥

एवं सुवर्णस्योन्मानं प्रतिपाद्येदानीं रजतस्याह—

**द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते॥ ३६४॥**
**शतमानं तु दशभिर्धरणैः पलमेव तु।**
**निष्कं सुवर्णाश्चत्वारः**

द्वे कृष्णले पूर्वोक्ते रूप्यमाषो रूप्यसंबन्धी माषः। ते रूप्यमाषाः षोडश धरणम्। पुराण इत्यस्यैव संज्ञान्तरम्।—'ते षोडश स्याद्धरणं पुराणश्चैव राजतः' इति (८।१३६) मनुस्मरणात्। दशभिर्धरणैः शतमानं पलमिति चाभिधीयते। पूर्वोक्ताश्चत्वारः सुवर्णा एको राजतो निष्को भवति॥ ३६४॥

इदानीं ताम्रस्योन्मानमाह—

**कार्षिकस्ताम्रिकः पणः॥ ३६५॥**

पलस्य चतुर्थोऽशः कर्ष इति लोकप्रसिद्धः। कर्षेणोन्मितः कार्षिकः। ताम्रस्य विकारस्ताम्रिकः। कर्षसंमितस्ताम्रविकारः पणसंज्ञो भवति कार्षापणसंज्ञकश्च—'कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः' इति (८।१३६) मनुवचनात्। पञ्चसुवर्णपलपक्षे विंशतिमाषः पणो भवति। तथा सति—'माषो विंशतिमो भागः पणस्य परिकीर्तितः' इत्यादिव्यवहारः सिद्धो भवति। चतुःसुवर्णपलपक्षे तु षोडशमाषः पणो भवति। अस्मिंश्च पक्षे सुवर्णकार्षापणपणशब्दानां समानार्थत्वेऽपि पणकार्षापणशब्दौ ताम्रविषयावेव। एवं तावद्धेमरूप्यताम्राणामुन्मानमुक्तम्। दण्डव्यवहारोपयोगित्वात्। कांस्यरीतिकादीनामपि लोकव्यवहाराङ्गभूतानामेवोन्मानं द्रष्टव्यम्॥ ३६५॥

स्वशास्त्रपरिभाषामाह—

**साशीतिपणसाहस्रो दण्ड उत्तमसाहसः।**
**तदर्धं मध्यमः प्रोक्तस्तदर्धमधमः स्मृतः॥ ३६६॥**

पणानां सहस्रं पणसहस्रं तत्परिमाणमस्येति पणसाहस्रः। अशीत्या सह

वर्तत इति साशीतिः । अशीत्यधिकपणसहस्रपरिमितो यो दण्डः स उत्तमसाहससंज्ञो वेदितव्यः । तदर्धं मध्यमः तस्य साशीतिपणसहस्रस्यार्धं चत्वारिंशदधिकपणपञ्चशतपरिमितो दण्डो मध्यमसाहससंज्ञः । तदर्धमधमः तस्य चत्वारिंशदधिकपञ्चशतपणस्यार्धं सप्तत्यधिकपणशतद्वयपरिमितो दण्डोऽधमसाहससंज्ञः स्मृत उक्तो मन्वादिभिः । यत्तु—'पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः । मध्यमः पञ्च विज्ञेयः सहस्रं त्वेव चोत्तमः' इति (८।१३८) मनुनोक्तं तत्पक्षान्तरममतिपूर्वापराधविषयं द्रष्टव्यम् ॥ ३६६ ॥

दण्डभेदानाह—

**धिग्दण्डस्त्वथ वाग्दण्डो धनदण्डो वधस्तथा ।**
**योज्या व्यस्ताः समस्ता वा ह्यपराधवशादिमे ॥ ३६७ ॥**

धिग्दण्डो धिग्धिगिति कुत्सनम् । वाग्दण्डस्तु परुषशापवचनात्मकः । धनदण्डो धनापहारात्मकः । वधदण्डः शारीरोऽवरोधादिजीवितान्तः । एते चतुर्विधा दण्डाः व्यस्ता एकैकशः, समस्ताः द्वित्राः त्रिचतुरो वाऽपराधानुसारेण प्रयोक्तव्याः । उक्तक्रमेण पूर्वपूर्वासाध्ये उत्तर उत्तरः प्रयोक्तव्यः । यथाह मनुः—'धिग्दण्डं प्रथमं कुर्याद्वाग्दण्डं तदनन्तरम् । तृतीयं धनदण्डं तु वधदण्डमतःपरम् ॥' इति ॥ ३६७ ॥

दण्डव्यवस्थानिमित्तान्याह—

**ज्ञात्वाऽपराधं देशं च कालं बलमथापि वा ।**
**वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत् ॥ ३६८ ॥**

यथापराधं ज्ञात्वा तदनुसारेण दण्डप्रणयनमेवं देशकालवयःकर्मवित्तानि ज्ञात्वा तदनुसारेण दण्ड्येषु दण्डार्हेषु दण्डप्रणयनं कुर्यात् । तथा बुद्धिपूर्वाबुद्धिपूर्वसकृदावृत्त्यनुसारेण च । यद्यपि राजानमधिकृत्यायं राजधर्मकलाप उक्तस्तथापि वर्णान्तरस्यापि विषयमण्डलादिपरिपालनाधिकृतस्यायं धर्मो वेदितव्यः । 'राजधर्मान्प्रवक्ष्यामि यथावृत्तो भवेन्नृपः' इत्यत्र पृथङ्नृपग्रहणात्करग्रहणस्य रक्षार्थत्वाच्च रक्षणस्य दण्डप्रणयनायत्तत्वादिति ॥ ३६८ ॥

इति श्रीपद्मनाभभट्टोपाध्यायात्मजस्य श्रीमत्परमहंसपरिव्राजकविज्ञानेश्वरभट्टारकस्य कृतौ ऋजुमिताक्षरायां याज्ञवल्क्यधर्मशास्त्रविवृतौ सदाचारः प्रथमाध्यायः उत्तमोपपदस्येयं शिष्यस्य कृतिरात्मनः । धर्मशास्त्रस्य विवृतिर्विज्ञानेश्वरयोगिनः ॥

अस्मिन्नध्याये प्रकरणानि । १ उपोद्घातप्रकरणम् । २ ब्रह्मचारिप्रकरणम् । ३ विवाहप्रकरणम् । ४ जातिविवेकप्रकरणम् । ५ गृहस्थधर्मप्रकरणम् । ६ स्नातकव्रतप्रकरणम् । ७ भक्ष्याभक्ष्यप्रकरणम् । ८ द्रव्यशुद्धिप्रकरणम् । ९ दानधर्मप्रकरणम् । १० श्राद्धप्रकरणम् । ११ गणपतिकल्पप्रकरणम् । १२ ग्रहशान्तिप्रकरणम् । १३ राजधर्मप्रकरणम् । एवं त्रयोदश प्रकरणानि ॥

याज्ञवल्क्यमुनिशास्त्रगतेयं विवृतिर्न कस्य विहिता विदुषः ।
प्रमिताक्षरापि विपुलार्थवती परिषिञ्चति श्रवणयोरमृतम् ॥ १ ॥

---

# व्यवहाराध्यायः ।

## साधारणव्यवहारमातृकाप्रकरणम् १

अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनं परमो धर्मः । तच्च दुष्टनिग्रहमन्तरेण न संभवति । दुष्टपरिज्ञानं च न व्यवहारदर्शनमन्तरेण संभवति । तद्व्यवहारदर्शनमहरहः कर्तव्यमित्युक्तं—'व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम्' इति । स च व्यवहारः कीदृशः कतिविधः कथं चेतीतिकर्तव्यताकलापो नाभिहितस्तदभिधानाय द्वितीयोऽध्याय आरभ्यते—

**व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ।**
**धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥ १ ॥**

व्यवहारानिति । अन्यविरोधेन स्वात्मसंबन्धितया कथनं व्यवहारः[2] । यथा कश्चिदिदं क्षेत्रादि मदीयमिति कथयति, अन्योऽपि तद्विरोधेन मदीयमिति । तस्यानेकविधत्वं दर्शयति बहुवचनेन । नृप इति न क्षत्रियमात्रस्यायं धर्मः किंतु प्रजापालनाधिकृतस्यान्यस्यापीति दर्शयति । पश्येदिति पूर्वोक्तस्यानुवादो धर्मविशेषविधानार्थः । विद्वद्भिर्वेदव्याकरणादिधर्मशास्त्राभिज्ञैः । ब्राह्मणैर्न क्षत्रियादिभिः । ब्राह्मणैः सहेति तृतीयानिर्देशादेषामप्राधान्यम् । 'सहयुक्तेऽप्रधाने' (पा. २।३।१९) इति स्मरणात् । अतश्चादर्शनेऽन्यथादर्शने वा राज्ञो दोषो न ब्राह्मणानाम् । यथाह मनुः (८।१२८)—'अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चैव[3] गच्छति ॥' इति । कथम् । धर्मशास्त्रानुसारेण नार्थशास्त्रानुसारेण[4] । देशादिसमयधर्मस्यापि[5] धर्मशास्त्राविरुद्धस्य धर्मशास्त्रविषयत्वान्न पृथगुपादानम् । तथाच वक्ष्यति[6]—'निजधर्माविरोधेन यस्तु सामयिको[7] भवेत् । सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥' इति । क्रोधलोभविवर्जित इति । धर्मशास्त्रानुसारेणेति सिद्धे 'क्रोधलोभविवर्जितः' इति वचनमादरार्थम् । क्रोधोऽमर्षः । लोभो लिप्सातिशयः ॥ १ ॥

---

१ दर्शनेन विनेति व्यवहारदर्शनं ग. २ 'विप्रतिपद्यमाननरान्तरगताज्ञाताधर्मज्ञापनानुकूलो व्यापारो व्यवहारः । वादिप्रतिवादिकर्तृकः संभवद्भोगसाक्षिप्रमाणको विरोधकोटिव्यवस्थापनानुकूलो व्यापारो वा सः । संप्रतिपत्त्युत्तरे तु व्यवहारपदप्रयोगो भाक्त इति मदनरत्ने' इति व्य. म.—'वि नानार्थेऽव संदेहे हरणं हार उच्यते । नाना संदेहहरणाद्व्यवहार इति स्मृतः ॥' इति कातीयम्. ३ चाधिगच्छति ख. ४ अर्थशास्त्रं नीतिशास्त्रं औशनसादिकम्. ५ देशेति । आदिना देवगृहादिपरिग्रहः । पारिभाषिकधर्मेण व्यवस्थानं समयः. ६ वक्ष्यति अग्रे संविद्व्यतिक्रमप्रकरणे. (श्लो. १८६). ७ सामयिको धर्मो यावत्पथिकं भोजनं देयमस्मदरातिमण्डलं तुरङ्गादयो न प्रस्थापनीया इत्येवंरूपः.

सभ्यांश्चाह—

**श्रुताध्ययनसंपन्ना धर्मज्ञाः सत्यवादिनः ।**
**राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥ २ ॥**

किंच श्रुताध्ययनसंपन्नाः श्रुतेन मीमांसाव्याकरणादिश्रवणेन अध्ययनेन च वेदाध्ययनेन संपन्नाः । धर्मज्ञाः धर्मशास्त्रज्ञाः । सत्यवादिनः सत्यवचनशीलाः । रिपौ मित्रे च ये समाः रागद्वेषादिरहिताः । एवंभूताः सभासदः सभायां संसदि यथा सीदन्त्युपविशन्ति तथा दानमानसत्कारै राज्ञा कर्तव्याः । यद्यपि श्रुताध्ययनसंपन्ना इत्यविशेषेणोक्तं तथापि ब्राह्मणा एव । यथाह **कात्यायनः**—'स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः । धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः ॥' इति । ते च त्रयः कर्तव्याः बहुवचनस्यार्थवत्त्वात्—'यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः' इति ( ८।११ ) **मनुस्मरणाच्च** । **बृहस्पतिस्तु** सप्त पञ्च त्रयो वा सभासदो भवन्तीत्याह—'लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा । यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा ॥' इति । नच ब्राह्मणैः सहेति पूर्वश्लोकोक्तानां ब्राह्मणानां श्रुताध्ययनसंपन्नाः इत्यादि विशेषणमिति मन्तव्यम् । तृतीयाप्रथमान्तनिर्दिष्टानां विशेषणविशेष्यभावासंभवात् । विद्वद्भिरित्यनेन पुनरुक्तिप्रसङ्गाच्च । तथाच **कात्यायनेन** ब्राह्मणानां सभासदां च [2]स्पष्टं भेदो दर्शितः—'सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः । ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः ॥' इति । तत्र ब्राह्मणा अनियुक्ताः सभासदस्तु नियुक्ता इति भेदः । अतएवोक्तम्—'नियुक्तो वाऽनियुक्तो वा धर्मज्ञो वक्तुमर्हति' इति । तत्र नियुक्तानां यथावस्थितार्थकथनेऽपि यदि राजाऽन्यथा करोति तदाऽसौ निवारणीयोऽन्यथा दोषः । उक्तंच **कात्यायनेन**—'अन्यायेनापि तं यान्तं येऽनुयान्ति सभासदः । तेऽपि तद्भागिनस्तस्माद्बोधनीयः स तैर्नृपः ॥' इति । अनियुक्तानां पुनरन्यथाभिधानेऽनभिधाने वा दोषो नतु राज्ञोऽनिवारणे—'[3]सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् । अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी ॥' इति ( ८।१३ ) **मनुस्मरणात्** । रिपौ मित्रे चेति चकाराल्लोकरञ्जनार्थं कतिपयैर्वणिग्भिरप्यधिष्ठितं सदः कर्तव्यम् । **यथाह कात्यायनः**—'कुलशीलवयोवृत्तवित्तवद्भिरमत्सरैः । वणिग्भिः स्यात्कतिपयैः कुलभूतैरधिष्ठितम् ॥' इति ॥ २ ॥

व्यवहारान्नृपः पश्येदित्युक्तं तत्रानुकल्पमाह—

**अपश्यता कार्यवशाद्व्यवहारान्नृपेण तु ।**
**सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥ ३ ॥**

---

१ मौलैः सेवकत्वेन पितृपितामहादिपरम्परायातैः. २ च भेदः स्पष्टो ग. ३ सभां वा न प्रवेष्टव्यं ग.

कार्यान्तर[1]व्याकुलतया व्यवहारानपश्यता नृपेण पूर्वोक्तैः सभ्यैः सह सर्वधर्मवित् सर्वान्[2]धर्मशास्त्रोक्तान्सामयिकांश्च धर्मान्वेत्ति विचारयतीति सर्वधर्मवित् ब्राह्मणो न क्षत्रियादिर्नियोक्तव्यो व्यवहारदर्शने। तं च **कात्यायनोक्त**गुणविशिष्टं कुर्यात्। **यथाह**—'दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम्। परत्र भीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितम्॥' इति। एवंभूतब्राह्मणासंभवे क्षत्रियं वैश्यं वा नियुञ्जीत न शूद्रम्। **यथाह कात्यायनः**—'ब्राह्मणो यत्र न स्यात्तु क्षत्रियं तत्र योजयेत्। वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत्॥' इति। **नारदेन** त्वयं[3]मेव मुख्यो दर्शितः—'धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः। समाहितमतिः पश्येद्व्यवहाराननुक्रमात्॥' इति। प्राड्विवाकमते स्थितो न स्वमते स्थितः। राजा चारचक्षुषा परसैन्यं पश्यतीतिवत्। तस्य चेयं यौगिकी संज्ञा। अर्थिप्रत्यर्थिनौ पृच्छतीति प्राट् तयोर्वचनं विरुद्धमविरुद्धं च सभ्यैः सह विविनक्ति विवे[4]चयति वेति विवाकः। प्राट् चासौ विवाकश्च प्राड्विवाकः। उक्तंच—'विवादानुगतं पृष्ट्वा ससभ्यस्तत्प्रयत्नतः। विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः॥'[5] इति॥ ३॥

प्राड्विवाकादयः सभ्या यदि रागादिना स्मृत्यपेतं व्यवहारं विचारयन्ति तदा राज्ञा किं कर्तव्यमित्यत आह—

**रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः।**
**सभ्याः पृथक्पृथग्दण्ड्या विवादाद्द्विगुणं दमम्॥ ४॥**

अपिच। पूर्वोक्ताः सभ्या रजसो निरङ्कुशत्वेन तदभिभूता रागात्स्नेहातिशयाल्लोभाल्लिप्सातिशयाद्भयात्संत्रासात्स्मृत्यपेतं स्मृतिविरुद्धं आदिशब्दादाचारापेतं कुर्वन्तः पृथक्पृथगेकैकशो विवादाद्विवादपराजयनिमित्ताद्दमाद्द्विगुणं दमं दण्ड्याः न पुनर्विवादास्पदीभूताद्द्रव्यात्। तथा सति स्त्रीसंग्रहणादिषु दण्डाभावप्रसङ्गः। रागलोभभयानामुपादानं रागादिष्वेव द्विगुणो दमो नाज्ञानमोहादिष्विति नियमार्थम्॥ **नच** 'राजा सर्वस्येष्टे ब्राह्मणवर्जम्' इति **गौतमव**[6]**चनान्न** ब्राह्मणा दण्ड्या इति मन्तव्यम्। तस्य प्रशंसार्थत्वात्॥ **यत्तु** षड्भिः परिहार्यो राज्ञा[7]ऽवध्यश्चाबन्ध्यश्चादण्ड्यश्चाबहिष्कार्यश्चापरिवाद्यश्चापरिहार्यश्चेति तदपि स एष बहुश्रुतो भवति लोकवेदवेदाङ्गवि[8]द्वाकोवाक्येतिहासपुराणकुशलस्तदपेक्षस्तद्वृत्तिश्चाष्टचत्वारिंशत्संस्कारैः संस्कृतस्त्रिषु कर्मस्वभिरतः षट्सु वा समयाचारिकेष्वभिविनीत इति प्रतिपादितबहुश्रुतविषयं न ब्राह्मणमात्रविषयम्॥४॥

---

१ व्यग्रतया ख. ग. २ धर्मान् शास्त्रोक्तान् ग. ३ ब्राह्मण एव. ४ विवक्तीति वा ग. ५ बृहस्पतिस्तु—'विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च। नयपूर्वं प्राग्वदति प्राड्विवाकस्ततः स्मृतः॥' इति व्य. म. ६ न ब्राह्मणो दण्ड्य इति क. ग. ७ राज्ञा वध्यश्चावध्यश्च. ग. ८ वेदाङ्गविद्वाक्येतिहास ग. ९ वाकोवाक्यं उक्तिप्रत्युक्तिमद्वाक्यम्.

व्यवहारविषयमाह—

**स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।**
**आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥ ५ ॥**

धर्मशास्त्रसमयाचारविरुद्धेन मार्गेण परैराधर्षितोऽभिभूतो यद्राज्ञे प्राड्विवाकाय वा आवेदयति विज्ञापयति चेद्यदि तदावेद्यमानं व्यवहारपदं प्रतिज्ञोत्तरसंशयहेतुपरामर्शप्रमाणनिर्णयप्रयोजनात्मको व्यवहारस्तस्य पदं विषयस्तस्य चेदं सामान्यलक्षणम् । स च द्विविधः । शङ्काभियोगस्तत्त्वाभियोगश्चेति । यथाह **नारदः**—'अभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः । शङ्काऽसतां तु संसर्गात्तत्त्वं होढाऽभिदर्शनात् ॥' इति । होढा लोप्त्रं[1] । लिङ्गमिति[2] यावत् । तेन दर्शनं, साक्षाद्वा दर्शनं होढाभिदर्शनं तस्मात् । तत्त्वाभियोगोऽपि द्विविधः । प्रतिषेधात्मको विध्यात्मकश्चेति । यथा मत्तो हिरण्यादिकं गृहीत्वा न प्रयच्छति । क्षेत्रादिकं ममायमपहरतीति च । उक्तंच **कात्यायनेन**—'न्याय्यं स्वं नेच्छते कर्तुमन्याय्यं वा करोति यः' इति । स पुनश्चाष्टादशधा भिद्यते । यथाह **मनुः** ( ८।४–७ )—'तेषामाद्यमृणादानं[3] निक्षेपोऽस्वामिविक्रयः । संभूय च समुत्थानं दत्तस्यानपकर्म च ॥ वेतनस्यैव[4] चाऽऽदानं संविदश्च व्यतिक्रमः । क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥ सीमाविवाद[5]धर्मश्च पारुष्ये दण्डवाचिके । स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च ॥ स्त्रीपुंधर्मो[6] विभागश्च द्यूतमाह्वय एव च । पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥' इति ॥ एतान्यपि साध्यभेदेन पुनर्बहुत्वं गतानि । यथाह **नारदः**—'एषामेव प्रभेदोऽन्यः शतमष्टोत्तरं भवेत्[7] । क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते ॥' इति ॥ आवेदयति चेद्राज्ञे इत्यनेन स्वयमेवागत्यावेदयति, न राजप्रेरितस्तत्पुरुषप्रेरितो वेति दर्शयति । यथाह **मनुः** ( ८।४३ )—'नोत्पादयेत्स्वयं कार्यं राजा नाप्यस्य पूरुषः । नच प्रापितमन्येन ग्रसेतार्थं कथंचन ॥' इति ॥ परैरिति परेण पराभ्यां परैरित्येकस्यैकेन द्वाभ्यां बहुभिर्वा व्यवहारो भवतीति दर्शयति ॥ यत्पुनः—'एकस्य बहुभिः सार्धं स्त्रीणां प्रेष्यजनस्य च । अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः ॥' इति **नारदवचनं** तद्भिन्नसाध्यद्वयविषयम् । आवेदयति चेद्राज्ञे इत्यनेनैव राज्ञा पृष्टो

१ लुप्यत इति लोप्त्रं चौर्यधनम्. २ लिङ्गं अव्यभिचरितं चिह्नमित्यर्थः. ३ ऋणादानं ऋणस्य न दानमदानम्, निक्षेपः स्वधनस्यान्यस्मिन्नर्पणम्, अस्वामिना कृतो विक्रयः, संभूयसमुत्थानं अनेकैर्मिलित्वा यत्र धनार्थं वाणिज्याद्युद्यमः क्रियते. दत्तस्यानपकर्म अप्रत्यर्पणम्. ४ कर्मकरस्य भृतेरदानम्, संविदः कृतव्यवस्थाया अतिक्रमः, अनुशयः क्रयविक्रये च कृते पश्चात्तापाद्विप्रतिपत्तिः, स्वामिपशुपालयोर्विवादः. ५ ग्रामसीमाविप्रतिपत्तिः, वाक्पारुष्यमाक्रोशनादि, दण्डपारुष्यं ताडनादि, स्तेयं निह्नवेन धनग्रहणम्, साहसं प्रसह्य धनहरणादि, स्त्रियश्च परपुरुषसंपर्कः. ६ स्त्रीसहितस्य पुंसो धर्मे व्यवस्था, विभागः पैतृकादिधनस्य, द्यूतं अक्षादिक्रीडा, पणव्यवस्थापनपूर्वकं पक्षिमेषादिप्राणियोधनं, समाह्वयस्य प्राणिद्यूतरूपत्वेन द्यूतावान्तरविशेषत्वादष्टादशसंख्योपपत्तिः. ७ स्मृतम् घ.

विनीतवेष आवेदयेत् । आवेदितं च युक्तं चेन्मुद्रादिना प्रत्यर्थ्याह्वानमकल्पादीनां चानाह्वानमित्याद्यर्थसिद्धमिति नोक्तम् । स्मृत्यन्तरे तु स्पष्टार्थमुक्तम् । यथा 'काले कार्यार्थिनं पृच्छेत्प्रणतं पुरतः स्थितम् । किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव ॥ केन कस्मिन्कदा कस्मात्पृच्छेदेवं सभागतम् । एवं पृष्टः स यद्ब्रूयात्स सभ्यैर्ब्राह्मणैः सह ॥ विमृश्य कार्यं न्याय्यं चेदाह्वानार्थमतः परम् । मुद्रां वा निक्षिपेत्तस्मिन्पुरुषं वा समादिशेत् ॥ अकल्पबालस्थविरविषमस्थक्रियाकुलान् । कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान् । मत्तोन्मत्तप्रमत्तार्तान्भृत्यान्नाह्वानयेन्नृपः ॥ न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् । सर्ववर्णोत्तमां कन्यां ता ज्ञातिप्रभुकाः स्मृताः ॥ तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः । निष्कुला याश्च पतितास्तासामाह्वानमिष्यते ॥ कालं देशं स विज्ञाय कार्याणां च बलाबले । अकल्पादीनपि शनैर्यानैराह्वानयेन्नृपः ॥ ज्ञात्वाभियोगं येऽपि स्युर्वने प्रव्रजितादयः । तानप्याह्वानयेद्राजा गुरुकार्येष्वकोपयन् ॥' इति । आसेधव्यवस्थाप्यर्थसिद्धैव नारदेनोक्ता—'वक्तव्येऽर्थे ह्यतिष्ठन्तमुत्क्रामन्तं च तद्वचः । आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् ॥ स्थानासेधः कालकृतः प्रवासात्कर्मणस्तथा । चतुर्विधः स्यादासेधो नासिद्धस्तं विलङ्घयेत् ॥ आसेधकाल आसिद्ध आसेधं योतिऽवर्तते । स विनेयोऽन्यथा कुर्वन्नासेद्धा दण्डभाग्भवेत् ॥ नदीसन्तारकान्तारदुर्देशोपप्लवादिषु । आसिद्धस्तं परासेधमुत्क्रामन्नापराध्नुयात् ॥ निर्वेष्टुकामो रोगार्तो यियक्षुर्व्यसने स्थितः । अभियुक्तस्तथान्येन राजकार्योद्यतस्तथा ॥ गवां प्रचारे गोपालाः सस्यावापे कृषीवलाः । शिल्पिनश्चापि तत्कालमायुधीयाश्च विग्रहे ॥' इति । आसेधो राजाज्ञयाऽवरोधः । अकल्पादयः पुत्रादिकमन्यं वा सुहृदं प्रेषयेयुः नच ते परार्थवादिनः ।—'यो न भ्राता नच पिता न पुत्रो न नियोगकृत् । परार्थवादी दण्ड्यः स्याद्व्यवहारेषु विब्रुवन् ॥' इति नारदवचनात् ॥ ५ ॥

---

१ 'शिक्षा'परपर्यायगरुडादिचिह्नेन. २ आधिव्याधिसहितादीनाम्. ३ पृच्छेत्प्रणतं इति पाठः. ४ अकल्पो व्याध्याद्यभिभूतः, विषमस्थ उत्पन्नसंकटः. ५ कार्यातिपाती कार्योल्लंघी. ६ मत्तो मादकद्रव्येण, उन्मत्तः उन्मादेन पञ्चविधेन वातपित्तश्लेष्मसन्निपातग्रहसंभवेनोपसृष्टः, प्रमत्तः सर्वदावधानहीनः. ७ ता हीनपक्षादयः ज्ञातिस्वामिका इत्यर्थः. ८ निष्कुलाः कुलहीनाः. ९ एतत्प्रसङ्गादकल्पाद्याह्वाने पूर्वनिषिद्धेऽपि प्रतिप्रसवमाह—कालमिति । तत्र प्रकारद्वयं शनैर्यानैरिति. १० अभियोगोऽभिग्रहः आरोपस्तम्. ११ आसेधो राजाधिकारिभिर्निरोधः १२ विवादार्थी वादी, आसेधयेत्प्रत्यर्थिनं निरोधयेत्. १३ आसेध इति । स चतुर्विधः—१ प्रकृते अस्मात्प्रदेशान्न गन्तव्यमिति स्थानासेधः, २ आसन्ध्यं न गन्तव्यमिति कालासेधः, ३ देशान्तरं प्रति न गन्तव्यमिति प्रवासासेधः, ४ असौ व्यापारो न कर्तव्य इति कर्मासेधः. १४ आसिद्धो निरुद्धः. १५ विनेयः शिक्षणीयः. १६ अन्यथा कुर्वन् अनासेधकाले आसेधं कुर्वन्. १७ आसेद्धा आसेधकर्ता राजाधिकारी. १८ नासिद्धं विलंघयेदित्यस्य प्रतिप्रसवमाह—नदीति. १९ निर्वेष्टुकाम आश्रमान्तरं गन्तुकामः, विवाहादावुद्यत इति यावत्. २० यियक्षुर्यष्टुमिच्छुः. २१ अभियुक्तो नियोजितः. २२ तत्कालं शिल्पकाले आयुधीया आयुधजीविनो योद्धारः. २३ विग्रहे संग्रामे. २४ प्रेषयन्ति. ख. २५ नियोगकृदाज्ञाकारी. २६ विब्रुवन् व्यवहारेषु विरुद्धं विविधं विशेषेण वा ब्रुवन्.

प्रत्यर्थिनि मुद्रालेख्यपुरुषाणामन्यतमेनानीते किं कुर्यादित्यत आह—

**प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना ।**
**समामासतदर्धाहर्नामजात्यादिचिह्नितम् ॥ ६ ॥**

अर्थ्यते इत्यर्थः साध्यः सोऽस्यास्तीत्यर्थी तत्प्रतिपक्षः प्रत्यर्थी तस्याग्रतः पुरतो लेख्यं लेखनीयम् । यथा येन प्रकारेण पूर्वमावेदनकाले आवेदितं तथा । न पुनरन्यथा । अन्यथावादित्वेन व्यवहारस्य भङ्गप्रसङ्गात् ।—'अन्यवादी क्रिया[1]-द्वेषी नोपस्थाता[2] निरुत्तरः । आहूतः[3] प्रपलायी च हीनः पञ्चविधः स्मृतः ॥' इति । आवेदनकाल एवार्तिवचनस्य लिखितत्वात्पुनर्लेखनमनर्थकमित्यत आह —समामासेत्यादि । संवत्सरमासपक्षतिथिवारादिना–अर्थिप्रत्यर्थिनाम ब्राह्मण-जात्यादिचिह्नितम् । आदिशब्देन द्रव्यतत्संख्यास्थानवेला[4]क्षमालिङ्गादीनि गृ-ह्यन्ते ॥ यथोक्तम्—'अर्थवं[5]द्धर्मसंयुक्तं परिपूर्णमनाकुलम् । साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च ॥ प्रसिद्धमविरुद्धं च निश्चितं साधनक्षमम्[6] । संक्षिप्तं नि-खिलार्थं[7] च देशकालाविरोधि च ॥ वर्षर्तुमासपक्षाहोवेलादेशप्रदेशवत् । स्था-नावसथसाध्याख्याजात्याकारवयोयुतम् ॥ साध्यप्रमाणसंख्यावदात्मप्रत्यर्थिना-मवत् । परात्मपूर्वजानेकराजनामभिरङ्कितम् ॥ क्षमालिङ्गात्मपीडावत्कथिताह-र्तृदायकम् । यदावेदयते राज्ञे तद्भाषेत्यभिधीयते ॥' इति । भाषा प्रतिज्ञा पक्ष इति नार्थान्तरम् । आवेदनसमये कार्यमात्रं लिखितं प्रत्यर्थिनोऽग्रतः समामा-सादिविशिष्टं लिख्यत इति विशेषः । संवत्सरविशेषणं यद्यपि सर्वव्यवहारेषु नोपयुज्यते तथाप्याधिप्रतिग्रहक्रयेषु निर्णयार्थमुपयुज्यते ।—'आधौ[8] प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा' इति वचनात् । अर्थव्यवहारेऽपि एकस्मिन्संवत्सरे य-त्संख्याकं यद्द्रव्यं यतो येन गृहीतं प्रत्यर्पितं च पुनरन्यस्मिन्वत्सरे तद्द्रव्यं त-त्संख्याकं ततस्तेन गृहीतं याच्यमानो यदि ब्रूयात्सत्यं गृहीतं प्रत्यर्पितं चेति । वत्सरान्तरे गृहीतं प्रत्यर्पितं नास्मिन्वत्सरे इत्युपयुज्यते । एवं मासाद्यपि यो-ज्यम् । देशस्थानादयः पुनः स्थावरेष्वेवोपयुज्यन्ते—'देशश्चैव तथा स्थानं सं-निवेशस्तथैव च । जातिः संज्ञाऽधिवासश्च प्रमाणं क्षेत्रनाम च ॥ पितृं[9]पैतामहं चैव पूर्वराजानुकीर्तनम् । स्थावरेषु विवादेषु दशैतानि निवेशयेत् ॥ इति स्मरणात् । देशो मध्यदेशादिः । स्थानं वाराणस्यादि । संनिवेशस्तत्रैव पूर्वाप-रदिग्विभागपरिच्छिन्नः सम्यङ्निविष्टो गृहक्षेत्रादिः । जातिरर्थिप्रत्यर्थिनोर्ब्राह्मण-

---

१ क्रियाद्वेषी कार्यद्वेषी. २ नोपस्थाता समीपे न तिष्ठन्. ३ आहुतव्यपलापी ग. ४ वेलेति दिनमध्येऽपि प्रातरादिमुहूर्तरूपो वा कालविशेष इत्यर्थः. ५ अर्थवदिति । अर्थवत्प्र-योजनवत्, धर्मसंयुक्तं धर्मो गुणः अल्पाक्षरत्वप्रभूतार्थवत्त्वादिकस्तेन युक्तं, परिपूर्णमध्याहा-रानपेक्ष, अनाकुलमसंदिग्धाक्षरं, साध्यवत्, सिषाधयिषितार्थसहितम्, वाचकपरं बहुव्रीहिगौ-णलाक्षणिकादिरहितं, प्राकृतार्थानुबन्धि पूर्वावेदितार्थानुरोधि. ६ साधने क्षमम् ख. ७ नियतार्थं ग. ८ इदमग्रे स्फुटीभविष्यत्यसाधारणव्यवहारमातृकाप्रकरणे. ९ पितृ इति लुप्तषष्ठीकं पृथक्पदं, पितुरिति पाठो वा.

त्वादिः । संज्ञा च देवदत्तादिः । अधिवासः समीपदेशनिवासी जनः । प्रमाणं निवर्तनादि भूपरिमाणम् । क्षेत्रनाम शालिक्षेत्रं क्रमुकक्षेत्रं कृष्णभूमः[1] पाण्डुभूमः इति । पितुः पितामहस्य च नामार्थिप्रत्यर्थिनोः पूर्वेषां त्रयाणाम् । राज्ञां नामकीर्तनं चेति । समामासादीनां यस्मिन्व्यवहारे यावदुपयुज्यते तत्र तावल्लेखनीयमिति तात्पर्यार्थः ॥ एवं पक्षलक्षणे स्थिते पक्षलक्षणरहितानां पक्षवदवभासमानानां पक्षाभासत्वं सिद्धमेवेति योगीश्वरेण न पृथक्पक्षाभासा उक्ताः । अन्यैस्तु विस्पष्टार्थमुक्ताः[2] ।—अप्रसिद्धं निराबाधं[3] निरर्थं निष्प्रयोजनम् । असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत् ॥' इति । अप्रसिद्धं मदीयं शशविषाणं गृहीत्वा न प्रयच्छतीत्यादि । निराबाधं अस्मद्गृहदीपप्रकाशेनायं स्वगृहे व्यवहरतीत्यादि । निरर्थं अभिधेयरहितं कचटतपगजडदबेत्यादि । निष्प्रयोजनं यथायं देवदत्तोऽस्मद्गृहसंनिधौ सुस्वरमधीत इत्यादि । असाध्यं यथाहं देवदत्तेन सभ्रूभङ्गमुपहसित इत्यादि । एतत्साधनासंभवादसाध्यम् । अल्पकालत्वान्न साक्षिसंभवो लिखितं दूरतोऽल्पत्वान्न दिव्यमिति । विरुद्धं यथाहं मूकेन शप्त इत्यादि । पुरराष्ट्रादिविरुद्धं[4] वा[5]—'राज्ञा विवर्जितो यश्च यश्च पौरविरोधकृत् । राष्ट्रस्य वा समस्तस्य प्रकृतीनां[6] तथैव च ॥ अन्ये वा ये पुरग्राममहाजनविरोधकाः । अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्तिताः ॥' इति ॥ यत्तु[7]—'अनेकपदसंकीर्णः पूर्वपक्षो न सिद्ध्यति' इति, तत्र[8] यद्यनेकवस्तुसंकीर्ण इत्युच्यते तदा न दोषः । मदीयमनेन हिरण्यं वासो रूपकादि वापहृतमित्येवंविधस्यादुष्टत्वात् । ऋणादानादिपदसंकरे पक्षाभास इति चेत्तदपि न । मदीया रूपका अनेन वृद्ध्या गृहीताः सुवर्णं चास्य हस्ते निक्षिप्तम्, मदीयं क्षेत्रमयमपहरतीत्यादीनां पक्षत्वमिष्यत एव । किंतु क्रियाभेदात्क्रमेण व्यवहारो न युगपदित्येतावत् ॥ यथाह कात्यायनः—'बहुप्रतिज्ञं[9] यत्कार्यं व्यवहारे सुनिश्चितम् । कामं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सया ॥' इति । तस्मादनेकपदसंकीर्णः पूर्वपक्षो युगपन्न सिद्ध्यतीति तस्यार्थः । अर्थिग्रहणात्[10] पुत्रपित्रादिग्रहणं तेषामेकार्थत्वात् । नियुक्तस्यापि नियोगेनैव तदेकार्थत्वाक्षेपात् ॥—'अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा । यो यस्यार्थे विवदते तयोर्जयपराजयौ ॥' इति स्मरणात् नियुक्तजयपराजयौ मूलस्वामिनोरेव । एतच्च[11] भूमौ फलके वा

---

१ कृष्णोदक्पाण्डुत्वच्प्रत्ययो बहुव्रीहेः. २ अत्र अप्रसिद्धादेः साधयितुमशक्यत्वादनिराकरणम् इति ख. पुस्तके विशेषः. ३ पीडारहितमित्यर्थः. ४ विनिगमनाभावादाह—पुरेति. ५ अत्र 'एतेषां स्वभावेनैव निराकरणमिति न निराक्रियते । तत्र च अप्रसिद्धादीनां व्युत्पत्त्यर्थमुपादानं तदप्यनेकपदसंकीर्णस्य निराकरणं न क्रियते' इति ख. पुस्तके विशेषः. ६ प्रकृतीनां जनानां नगरस्थानाम्. ७ अप्रसिद्धादीनां पक्षाभासत्वमिवानेकपदसंकीर्णपूर्वपक्षस्यापि तत्त्वमेव । अनेकैः पदैः संकीर्णो यः पूर्वपक्षः प्रतिज्ञा सा न सिद्ध्यति आभासरूपा भवतीति तदर्थप्रतीतेस्तन्निराकरोति—यत्त्वित्यादिना. ८ तत्र पदशब्दः पद्यते ज्ञायते इति व्युत्पत्त्या किं वस्तुपर उत ऋणादानादिरूपव्यवहारविषयपरः । तत्र न तावदाद्ये पक्षाभासत्वमित्याह—तत्रेति. ९ बहुप्रतिज्ञं बहुपूर्वपक्षम्. १० पुत्रपौत्रादीनां क. ११ अर्थैवेदितमित्यर्थः.

[1]पाण्डुलेखेन लिखित्वा [2]आवापोद्धारेण विशोधितं पश्चात्पत्रे निवेशयेत् ।—'पूर्वपक्षं [3]स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत् । पाण्डुलेखेन फलके ततः पत्रे विशोधितम् ॥' इति **कात्यायन**स्मरणात् । शोधनं च यावदुत्तरदर्शनं कर्तव्यं नातः परम् । अनवस्थाप्रसङ्गात् । अतएव **नारदेनो**क्तम्—'शोधयेत्पूर्ववादं तु यावन्नोत्तरदर्शनम् । [4]अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत् ॥' इति । पूर्वपक्षमशोधयित्वैव यदोत्तरं दापयन्ति सभ्यास्तदा रागाल्लोभादित्युक्तदण्डेन सभ्यान्दण्डयित्वा पुनः प्रतिज्ञापूर्वकं व्यवहारः प्रवर्तनीयो राज्ञेति ॥ ६ ॥

एवं शोधितपत्रारूढे पूर्वपक्षे किं कर्तव्यमित्यत आह—

**श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसंनिधौ ।**

श्रुतो भाषार्थो येन प्रत्यर्थिनाऽसौ श्रुतार्थः तस्योत्तरं पूर्वपक्षादु[5]त्तरत्र भवतीत्युत्तरं लेख्यं लेखनीयम् । पूर्वावेदकस्यार्थिनः संनिधौ समीपे उत्तरं च यत्पूर्वोक्तस्य निराकरणं तदुच्यते । **यथाह**—'पक्षस्य व्यापकं सारमसंदिग्धमनाकुलम् । अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः ॥' इति । पक्षस्य व्यापकं निराकरणसमर्थम् । सारं न्याय्यं न्यायादनपेतम् । असंदिग्धं संदेहरहितम् । अनाकुलं पूर्वापराविरुद्धम् । अव्याख्यागम्यं अप्रसिद्धपदप्रयोगेण [6]दुःश्लिष्टविभक्तिसमाससा[7]ध्याहाराभिधानेन वा [8]अन्यदेशभाषाभिधानेन वा यद् व्याख्येयार्थं न भवति तत्सदुत्तरम् ॥ **तच्च चतुर्विधम्**—संप्रतिपत्तिर्मिथ्या [9]प्रत्यवस्कन्दनं पूर्वन्यायश्चेति । **तथाह कात्यायनः**—'सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा । पूर्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधम् ॥' इति । तत्र सत्योत्तरं यथा । रूपकशतं मह्यं धारयतीत्युक्ते सत्यं धारयामीति । **यथाह**—'साध्यस्य सत्यवचनं प्रतिपत्ति[10]रुदाहृता' इति । मिथ्योत्तरं तु नाहं धारयामीति । तथाच **कात्यायनः**—'अभियुक्तोऽभियो[11]गस्य यदि कुर्यादपह्नवम् । मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः ॥' इति ॥ **तच्च मिथ्योत्तरं चतुर्विधम्**—'मिथ्यैतन्नाभिजानामि तदा तत्र न संनिधिः । अजातश्चास्मि तत्काल इति मिथ्या चतुर्विधम् ॥' इति । प्रत्यवस्कन्दनं नाम सत्यं गृहीतं प्रतिदत्तं प्रतिग्रहेण लब्धमिति वा । **यथाह नारदः**—'अर्थिना [12]लेखितो योऽर्थः प्रत्यर्थी यदि तं [13]तथा-।-प्रपद्य कारणं ब्रूयात्प्रत्यवस्कन्दनं स्मृतम् ॥' इति । **प्राङ्न्यायोत्तरं** तु यत्राभियुक्त एवं ब्रूयादस्मिन्नर्थेऽनेनाहमभियुक्तस्तत्र चायं व्यवहारमार्गेण

---

१ पाण्डुति खडीति भाषाप्रसिद्धः. २ आवापेति न्यूनाधिक्यपरिहाराय प्रक्षेपनिष्कासनाभ्यामित्यर्थः. ३ सहजोक्तं न तु छलादिना. ४ उत्तरेणावष्टब्धस्य प्रतिबद्धस्य पूर्ववादस्य शोधनं भवेदित्यर्थः. ५ उत्तरत्र अग्रे. ६ दुःश्लिष्टमसंबद्धम्, अश्लिष्टमिति पाठः. ७ अध्याहारेण सहितं साध्याहारम्. ८ अदेशभाषेति पाठः. ९ प्रत्यवस्कन्दनं कारणोत्तरम्. १० प्रतिपत्तिः संप्रतिपत्तिः सत्योत्तरमित्यनर्थान्तरम्. ११ अभियुक्तस्य ग. १२ ण्यन्तस्येदं रूपम्. १३ तथाप्रपद्य तथैवाङ्गीकृत्येत्यर्थः.

पराजित इति। उक्तंच कात्यायनेन—'[1]आचारेणावसन्नोऽपि पुनर्लेखयते यदि। सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते॥' इति। एवमुत्तरलक्षणे स्थिते उत्तरलक्षणरहितानामुत्तरवदवभासमानानामुत्तराभासत्वमर्थसिद्धम्। स्पष्टीकृतं च स्मृत्यन्तरे—'संदिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च। पक्षैकदेशव्याप्यन्यत्तथा नैवोत्तरं भवेत्॥ यद्व्यस्तपदमव्यापि निगूढार्थं तथाकुलम्। व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये॥' इति। तत्र संदिग्धं—सुवर्णशतमनेन गृहीतमित्युक्ते सत्यं गृहीतं सुवर्णशतं माषशतं वेति। प्रकृतादन्यत्—यथा सुवर्णशताभियोगे पणशतं धारयामीति। अत्यल्पं—सुवर्णशताभियोगे पञ्चशतं[2] धारयामीति। अतिभूरि—सुवर्णशताभियोगे द्विशतं धारयामीति। पक्षैकदेशव्यापि—हिरण्यवस्त्राद्यभियोगे हिरण्यं गृहीतं नान्यदिति[3]। व्यस्तपदं[4]—ऋणादानाभियोगे पदान्तरेणोत्तरम्, यथा सुवर्णशताभियोगे अनेनाहं ताडित इति। अव्यापि—देशस्थानादिविशेषणव्यापि, यथा मध्यदेशे[5] वाराणस्यां पूर्वस्यां दिशि क्षेत्रमनेनापहृतमिति पूर्वपक्षे लिखिते[6], क्षेत्रमपहृतमिति। निगूढार्थं—यथा सुवर्णशताभियोगे किमहमेवास्मै धारयामीत्यत्र ध्वनिना[7] प्राड्विवाकः सभ्यो वा अर्थी वा अन्यस्मै धारयतीति सूचयतीति निगूढार्थम्। आकुलं पूर्वापरविरुद्धम्—यथा सुवर्णशताभियोगे कृते सत्यं गृहीतं न धारयामीति। व्याख्यागम्यं—दुःश्लिष्टविभक्तिसमाससाध्याहाराभिधानेन व्याख्यागम्यम्, अदेशभाषाभिधानेन वा। यथा सुवर्णशतविषये पितृऋणाभियोगे गृहीतशतवचनात् सुवर्णानां पितुर्न जानामीति। अत्र गृहीतशतस्य पितुर्वचनात्सुवर्णानां शतं गृहीतमिति न जानामीति। असारं—न्यायविरुद्धम्, यथा सुवर्णशतमनेन वृद्ध्या गृहीतं वृद्धिरेव दत्ता न मूलमित्यभियोगे सत्यं वृद्धिर्दत्ता न मूलं गृहीतमिति। उत्तरमित्येकवचननिर्देशादुत्तराणां संकरो निरस्तः। यथाह कात्यायनः—'पक्षैकदेशे यत्सत्यमेकदेशे च कारणम्। मिथ्या चैवैकदेशे च संकरात्तदनुत्तरम्॥' इति। अनुत्तरत्वे च कारणं तेनैवोक्तम्—'नचैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः। नचार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम्॥' इति। मिथ्याकारणोत्तरयोः संकरे अर्थिप्रत्यर्थिनोर्द्वयोरपि क्रिया प्राप्नोति—'मिथ्या[8] क्रिया पूर्ववादे कारणे[9] प्रतिवादिनि' इति स्मरणात्। तदुभयमेकस्मिन्व्यवहारे विरुद्धम्। यथा सुवर्णं रूपकशतं चानेन गृहीतमित्यभियोगे सुवर्णं न गृहीतं रूपकशतं गृहीतं प्रतिदत्तं चेति। कारण[10]प्राङ्न्यायसंकरे तु प्रत्यर्थिन एव क्रियाद्वयम्—'प्राङ्न्याय[11]कारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्'

---

१ व्यवहारेण पराजितोऽपि. २ अर्धन्यूनतयात्यल्पत्वमस्य. ३ अन्यत् पक्षैकदेशव्यापि चेत्यर्थः. ४ व्यस्तपदं असंबद्धपदकम्. ५ विन्ध्यहिमाचलयोर्मध्यं मध्यदेशः. ६ अन्तर्भावितण्यर्थमिदम्. ७ ध्वनिना किमादिबोध्येन. ८ न वादिद्वयपरत्वमिति सूचयितुं मिथ्येति। मिथ्योत्तरे इत्यर्थः। पूर्ववादे कर्मण्यण् पूर्ववादिनीत्यर्थः. ९ कारणे कारणोत्तरे. १० तयोर्मिथः संकरे त्वित्यर्थः. ११ तयोरुक्तावित्यर्थः। नेदं प्रत्येकपरम्। करणांशे 'कारणे प्रतिवादिनि' इत्यनेन सिद्धत्वात्। तस्मात्सांकर्यपरमेवेदम्। अतएव समासनिर्देशसंगतिरपि.

इति । यथा सुवर्णं गृहीतं प्रतिदत्तं [1]रूपके व्यवहारमार्गेण पराजित इति । [2]अत्र च प्राङ्न्याये जयपत्रेण वा प्राङ्न्यायदर्शिभिर्वा [3]भावयितव्यम् । [4]कारणोक्तौ तु साक्षिलेख्या[5]दिभिर्भावयितव्यमिति विरोधः । एवमुत्तर[6]त्रयसंकरेऽपि द्रष्टव्यम् । यथानेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीत्यभियोगे सत्यं सुवर्णं गृहीतं [7]प्रतिदत्तं रूपकशतं न गृहीतं, वस्त्रविषये तु पूर्वन्यायेन पराजित इति । एवं [8]चतुःसंकरेपि । एतेषां चानुत्तरत्वं यौगपद्येन तस्यांशस्य तेन तेन विनाऽसिद्धेः [9]क्रमेणोत्तरत्वमेव । [10]क्रमश्चार्थिनः प्रत्यर्थिनः सभ्यानां चेच्छया भवति । [11]यत्र [12]पुनरुभयोः संकरस्तत्र यस्य प्रभूतार्थविषयत्वं [13]तत्क्रियोपादानेन पूर्वं व्यवहारः प्रवर्तयितव्यः पश्चादल्पविषयोत्तरोपादानेन च व्यवहारो द्रष्टव्यः । [14]यत्र च संप्रतिपत्तेरुत्तरान्तरस्य च संकरस्तत्रोत्तरान्तरोपादानेन व्यवहारो द्रष्टव्यः । संप्रतिपत्तौ क्रियाभावात् ॥ **यथा हारीतेन**—'मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे । सत्यं वापि सहान्येन तत्र ग्राह्यं किमुत्तरम् ॥' इत्युक्त्वोक्तम्—'[15]यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम् । उत्तरं तत्र तज्ज्ञेयमसंकीर्णमतोऽन्यथा ॥' संकीर्णं भवतीति शेषः । [16]शेषापेक्षया ऐच्छि[17]कक्रमं भवतीत्यर्थः । तत्र प्रभूतार्थ —यथा अनेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीत्यभियोगे सुवर्णं रूपकशतं च न गृहीतं वस्त्राणि तु गृहीतानि प्रतिदत्तानि चेति । अत्र मिथ्योत्तरस्य प्रभूतविषयत्वादर्थिनः क्रियामादाय प्रथमं व्यवहारः प्रवर्तयितव्यः पश्चाद्वस्त्रविषयो व्यवहारः । एवं मिथ्याप्राङ्न्यायसंकरे कारणप्राङ्न्यायसंकरे च योजनीयम् । तथा तस्मिन्नेवाभियोगे सत्यं सुवर्णं रूपकशतं च गृहीतं प्रति दास्यामि वस्त्राणि तु न गृहीतानि गृहीतानि प्रतिदत्तानीति वा वस्त्रविषये पूर्वं पराजित इति चोत्तरे संप्रतिपत्तेर्भूरिविषयत्वेऽपि तत्र क्रियाभावान्मिथ्याद्युत्तरक्रियामादाय व्यवहारः प्रवर्तयितव्यः । [18]यत्र तु मिथ्याकारणोत्तरयोः कृत्स्नपक्षव्यापित्वम् **यथा**—[19]शृङ्गग्राहिकया कश्चि[20]द्वदति इयं गौर्मदीया अमुकस्मिन्काले नष्टा अद्यास्य गृहे दृष्टेति । [21]अन्यस्तु मिथ्यैतत्, [22]प्रदर्शितकालात्पूर्वमेवास्मद्गृहे स्थिता मम गृहे जाता चेति वदति । इदं तावत्पक्षनिराकरणसमर्थत्वान्नानुत्तरम् । नापि मिथ्यैव, कारणोपन्यासात् । नापि कारणम्, एकदेशस्याप्यभ्युपगमाभावात् । तस्मा[23]त्संका-

१ रूपकशते ग. २ द्वितीयसंकरे त्वित्यर्थः. ३ साधयितव्यमेतैः कृत्वा. ४ कारणोत्तरे तु ग. ५ आदिना दिव्यपरिग्रहः. ६ उत्तरत्रयेति मिथ्या–कारण–प्राङ्न्यायरूपे. ७ प्रतिदास्यामि ग ८ चतुःसंकरेति । यथा अनेन सुवर्णं रूप्यकशतं वस्त्राणि धान्यं च गृहीतमित्यभियोगे–सुवर्णं धारयामि रूपकशतं न गृहीतं वस्त्राणि प्रतिग्रहेण लब्धानि धान्यविषये पूर्वन्यायेन पराजित इति । एवं मिथ्याप्राङ्न्यायसंकरेऽपि द्रष्टव्यम्. ९ क्रमेण त्वित्यर्थः. १० चेन प्राड्विवाकादेः समुच्चयः. ११ यत्र त्वित्यर्थः. १२ मिथ्याकारणोत्तरयोः. १३ तत्साधकक्रियाग्रहणेन. १४ सत्योत्तरसंकरस्य पूर्वमनुपन्यासे बीजं ध्वनयन् तत्र नियामकान्तरमाह यत्रचेति. १५ यद् उत्तरम्. १६ अपेक्षाक्रमं भवतीत्यर्थः ग. १७ ऐच्छिकः क्रमो भवतीत्यर्थः ख. १८ संकीर्णोत्तरस्य यौगपद्येन सर्वथाऽनुत्तरत्वे प्राप्ते क्वचित्प्रतिप्रसवमाह यत्रत्विति. १९ तन्न्यायेनेत्यर्थः. २० कश्चिद् वादी. २१ अन्यः प्रतिवादी. २२ एतत्प्रदर्शित. ख. २३ अत्र कारणस्याप्राधान्यं मिथ्योत्तरस्य प्राधान्यं तस्य तदुपपादकस्यापि संभवात् । अतएव तत्र सहयोगे तृतीया कृता.

रणं मिथ्योत्तरमिदम् ।—अत्र च प्रतिवादिनः क्रिया, 'कारणे प्रतिवादिनि' इति वचनात् ॥ नन्[1]तु 'मिथ्या क्रिया पूर्ववादे' इति पूर्ववादिनः कस्मात्क्रिया न भवति । तस्य शुद्धमिथ्याविषयत्वात् । कारणे प्रतिवादिनीत्येतदपि कस्माच्छुद्धकारणविषयं न भवति । नैतत् । सर्वस्यापि कारणोत्तरस्य मिथ्यासहचरितरूपत्वाच्छुद्धकारणोत्तरस्याभावात् ॥ प्रसिद्ध[2]कारणोत्तरे प्रतिज्ञातार्थैकदेशस्याभ्युपगमेनैकदेशस्य मिथ्यात्वम्—यथा सत्यं रूपकशतं गृहीतं न धारयामि प्रतिदत्तत्वादिति । प्रकृतोदाहरणे तु प्रतिज्ञातार्थैकदेशस्याप्यभ्युपगमो नास्तीति विशेषः ॥ एतच्च **हारीतेन** स्पष्टमुक्तम्—'मिथ्याकारणयोर्वापि ग्राह्यं कारणमुत्तरम्' इति । यत्र मिथ्याप्राङ्न्याययोः पक्षव्यापित्वम्—**यथा** रूपकशतं धारयतीत्यभियोगे मिथ्यैतदस्मिन्नर्थे पूर्वमयं पराजित इति । अत्रापि प्रतिवादिन एव क्रिया—'प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्' इति वचनात्, शुद्धस्य प्राङ्न्यायस्याभावादनुत्तरत्वप्रसङ्गात्, संप्र[3]तिपत्तेरपि साध्यत्वेनोपदिष्टस्य पक्षस्य सिद्धत्वोपन्यासेन साध्यत्वनिराकरणत्वादेवोत्तरत्वम् । **यदा तु** कारणप्राङ्न्यायसंकरः—**यथा** शतमनेन गृहीतमित्यभियुक्तः प्रतिवदति सत्यं गृहीतं प्रतिदत्तं चेत्यस्मिन्नेवार्थे प्राङ्न्यायेनायं पराजित इति । तत्र प्रतिवादिनो यथारुचीति न कचिद्वादिप्रतिवादिनोरेकस्मिन्व्यवहारे क्रियाद्वयप्रसङ्ग इति निर्णयः ॥

एवमुत्तरे पत्रे निवे[4]शिते साध्यसिद्धेः साधनायत्तत्वात्साधननिर्देशं कः कुर्यादित्यपेक्षित आह—

## ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ॥ ७ ॥

तत उत्तरानन्तरमर्थी[5] साध्यवान् सद्य एवानन्तरमेव लेखयेत् । प्रतिज्ञातः साध्यः स चासावर्थश्चेति प्रतिज्ञातार्थः तस्य साधनं साध्यतेऽनेनेति साधनं प्रमा[6]णम् । अत्र सद्यो लेखयेदिति वदतोत्तराभिधाने कालविलम्बनमप्यङ्गीकृतमिति गम्यते । तच्चोत्तरत्र विवेचयिष्यते । अर्थी प्रतिज्ञातार्थसाधनं लेखयेदिति वदता यस्य साध्यमस्ति स प्रतिज्ञातार्थसाधनं लेखयेदित्युक्तं, अतश्च प्राङ्न्यायोत्तरे प्राङ्न्यायस्यैव साध्यत्वात्प्रत्यर्थ्येवार्थी जात इति स एव साधनं लेखयेत् । कारणोत्तरेऽपि कारणस्यैव साधुत्वात्कारणवाद्येवार्थीति स एव लेखयेत् । मिथ्योत्तरे तु पूर्ववाद्येवार्थी स एव साधनं निर्दिशेत्[7] । ततोऽर्थी लेखयति वदता अर्थ्येव[8] लेखयेन्नान्य इत्युक्तम् । अतश्च संप्रतिपत्त्युत्तरे साध्याभावेन भाषोत्तरत्वादिनोर्द्वयोरप्यर्थित्वाभावात्साधननिर्देश एव नास्तीति तावतै[9]व व्यवहारः परिसमाप्यत इति गम्यते । एतदेव **हारीतेन** स्पष्टमुक्तम्—'प्राङ्न्यायकारणोक्तौ

---

१ प्रतिवादिना तस्यैवोक्तत्वमभिप्रेत्य प्राधान्यादरेण शङ्कते नन्विति. २ सत्यं गृहीतं प्रतिदत्तं चेत्येवंरूपे प्रागुक्ते. ३ सत्यस्यापि. ४ निवेशिते लेखिते. ५ अर्थ्यत इत्यर्थः साध्यं स यस्यास्तीत्यर्थी. ६ प्रमाणं लिखितादि वक्ष्यमाणम्. ७ निर्दिशेल्लेखयेत्. ८ अर्थ्येवेति आक्षेपादेव कर्तृलाभे तदुक्तिर्नियमार्थेति भावः. ९ तादृशोत्तरदानेनैव.

तु प्रत्यर्थी निर्दिशेत्क्रियाम् । मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत् ॥' इति ॥ ७ ॥

ततः[1] किमित्यत आह—

## तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा ।

तस्य साधनस्य प्रमाणस्य वक्ष्यमाणलिखितसाक्ष्यादिलक्षणस्य सिद्धौ निर्वृत्तौ सिद्धिं साध्यस्य जयलक्षणां प्राप्नोति । अतोऽस्मात्प्रकारादन्यथा प्रकारान्तरेण साधनासिद्धौ विपरीतं साध्यस्यासिद्धिं पराजयलक्षणमाप्नोतीति संबन्धः ॥

एवं व्यवहाररूपमभिधायोपसंहरति—

## चतुष्पाद्व्यवहारोऽयं विवादेषूपदर्शितः ॥ ८ ॥

व्यवहारान्नृपः पश्येदित्युक्तो व्यवहारः सोऽयमित्थं चतुष्पाच्चतुरंशकल्पनया विवादेषु ऋणादानादिषूपदर्शितो वर्णितः । तत्र प्रत्यर्थिनोऽग्रतो लेख्यं इति भाषापादः प्रथमः । श्रुतार्थस्योत्तरं लेख्यमित्युत्तरपादो द्वितीयः । ततोऽर्थी लेखयेत्सद्य इति क्रियापादस्तृतीयः । तत्सिद्धौ सिद्धिमाप्नोतीति साध्यसिद्धिपादश्चतुर्थः । यथोक्तम्—'परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु । वाक्यन्यायाद्व्यवस्थानं व्यवहार उदाहृतः ॥ भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः । आक्षिप्त[2]चतुरंशस्तु चतुष्पादभि[3]धीयते ॥' इति । संप्रतिपत्त्युत्तरे तु साधनानिर्देशाद्भाषार्थस्यासाध्यत्वाच्च न साध्यसिद्धिल[4]क्षणः पादोऽस्तीति द्विपात्त्वमेव । उत्तराभिधानानन्तरं सभ्यानामर्थिप्रत्यर्थिनोः कस्य क्रिया स्यादिति परामर्शलक्षणस्य प्रत्या[5]कलितस्य योगीश्वरेण व्यवहारपादत्वेनानभिधानाद् व्यवहर्तुः संबन्धाभावाच्च न व्यवहारपादत्वमिति स्थितम् ॥ ८ ॥

इति साधारणव्यवहारमातृकाप्रकरणम् ।

---

## असाधारणव्यवहारमातृकाप्रकरणम् २

एवं सर्वव्यवहारोपयोगिनीं व्यवहारमातृकामभिधायाधुना कचिद्व्यवहारविशेषे कंचिद्विशेषं दर्शयितुमाह—

## अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।

[6]अभियुज्यत इति अभियोगोऽपराधः तमभियोगमनिस्तीर्यापरिहृत्य एनमभियोक्तारं न प्रत्यभियोजयेत् अपराधेन न संयोजयेत् । यद्यपि । [7]प्रत्यवस्कन्दनं प्र-

---

१ ततः साधनलेखनोत्तरम्. २ मुख्यपादत्वासंभवादाह चतुरंशेति. ३ अभिधीयते ऋणादानादिषु वक्ष्यमाणेषु. ४ लक्षणोपि इति पाठः. ५ प्रत्याकलितस्य पौनःपुन्येन विचारणस्येत्यर्थः. ६ अभियुज्यते दोषविषयीक्रियतेऽनेनेति शेषः. ७ सत्यं गृहीतं प्रतिदत्तं चेति कारणोत्तरस्य अनेन दत्तं स्थितं मया पुनर्दत्तमित्येवं प्रत्यभियोगरूपत्वमित्यर्थः.

त्यभियोगरूपं तथापि स्वापराधपरिहारात्मकत्वान्नास्य प्रतिषेधविषयत्वम् । अतः स्वाभियोगानुपमर्दनरूपस्य प्रत्यभियोगस्यायं निषेधः । इदं प्रत्यर्थिनमधिकृत्योक्तम्—

अथ अर्थिनं प्रत्याह—

**अभियुक्तं च नान्येन नोक्तं विप्रकृतिं नयेत् ॥ ९ ॥**

अभियुक्तं च नान्येनेति । अन्येनाभियुक्तमनिस्तीर्णाभियोगमन्योऽर्थी नाभियोजयेत् । **किंच** । उक्तमावेदनसमये यदुक्तं तद्विप्रकृतिं विरुद्धभावं न नयेन्न प्रापयेत् । **एतदुक्तं भवति**—यद्वस्तु येन रूपेणावेदनसमये निवेदितं तद्वस्तु तथैव[1] भाषाकालेऽपि लेखनीयं नान्यथेति ॥ **ननु**—'प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना' इत्यत्रैवेदमुक्तं किमर्थं पुनरुच्यते नोक्तं विप्रकृतिं नयेदिति । **उच्यते**—'यथाऽऽवेदितमर्थिना' इत्यनेनाऽऽवेदनसमये यद्वस्तु निवेदितं तदेव भाषासमयेऽपि तथैव लेखनीयम् । एकस्मिन्नपि[2] पदे[3] न वस्त्वन्तरमित्युक्तम् । यथानेन रूपकशतं वृद्ध्या गृहीतमित्यावेदनसमये प्रतिपाद्य प्रत्यर्थिसंनिधौ भाषासमये वस्त्रशतं वृद्ध्या गृहीतमिति न वक्तव्यम् । तथा सति पदान्तरागमनेऽपि[4] वस्त्वन्तरगमनाद्धीनवादी दण्ड्यः स्यादिति । नोक्तं विप्रकृतिं नयेदित्यनेनैकवस्तुत्वेऽपि पदान्तरगमनं निषिध्यते । यथा रूपकशतं वृद्ध्या गृहीत्वाऽयं न प्रयच्छतीत्यावेदनकालेऽभिधाय भाषाकाले रूपकशतं बलादपहृतवानिति वदतीति । तत्र वस्त्वन्तरगमनं निषिद्धमिह तु पदान्तरगमनं निषिध्यत इति न पौनरुक्त्यम् । एतदेव स्पष्टीकृतं **नारदेन**—'पूर्वपादं परित्यज्य योऽन्यमालम्बते पुनः । पदसंक्रमणाज्ज्ञेयो[5] हीनवादी स वै नरः ॥' इति । हीनवादी दण्ड्यो भवति न प्रकृतादर्थाद्धीयते । अतः प्रत्यर्थिनोऽर्थिनश्च प्रमादपरिहारार्थमेवायमभियोगमनिस्तीर्येत्याद्युपदेशो न प्रकृतार्थसिद्ध्यसिद्धिविषयः[6] । अत एव **वक्ष्यति**—'छलं निरस्य भूतेन[7] व्यवहारान्नयेन्नृपः' इति । एतच्चार्थव्यवहारे[8] द्रष्टव्यम् । मन्युकृते[9] तु व्यवहारे प्रमादाभिधाने प्रकृतादपि व्यवहाराद्धीयत एव । **यथाह नारदः**—'सर्वेष्वर्थविवादेषु वाक्छले नावसीदति । परस्त्री भूम्यृणादाने शास्योऽप्यर्थान्न हीयते ॥' इति । **अस्यार्थः**—सर्वेष्वर्थविवादेषु न मन्युकृतेषु वाक्छले प्रमादाभिधानेऽपि नावसीदति न पराजीयते । न प्रकृतादर्थाद्धीयत इत्यर्थः । अत्रोदाहरणं परस्त्रीत्यादि । परस्त्रीभूम्यृणादाने प्रमादाभिधानेन दण्ड्योऽपि यथा प्रकृतादर्थान्न हीयते एवं सर्वेष्वर्थविवादेष्विति । अर्थ[10]विवादग्रहणान्मन्युकृतविवादेषु प्रमादाभिधाने प्रकृतादप्यर्थाद्धीयत इति ग-

---

१ तथैवेति । अन्यथाऽन्यथावादित्वेन भङ्गप्रसङ्गात्. २ ऋणादानादिव्यवहारविषये. ३ अत्र प्रकरणे पदशब्दो विषयवाची. ४ विषयान्तरं प्रत्यगमनेऽपीत्यर्थः. ५ पदान्तरं प्रति गमनाद्वस्त्वन्तरगमनाच्चेत्यर्थः. ६ सिध्यसिद्धीति । हीनवादित्वे प्रकृतार्थासिद्धिस्तथात्वे तत्सिद्धिरित्यर्थः. ७ पूर्वभूतेन सत्येन व्यवहारेण. ८ हीनवादी दण्ड्य एव, न प्रकृतार्थाद्धीयत इत्येतत्. ९ मन्युकृते वाक्पारुष्यदण्डपारुष्यादिव्यवहारे. १० एवं शाब्दमार्थमुक्त्वा द्वितीयमसंपदध्वनितमाह अर्थेति.

म्यते । यथाऽहमनेन शिरसि पादेन ताडित इत्यावेदनसमयेऽभिधाय भाषाकाले हस्तेन पादेन वा ताडित इति वदन्न केवलं दण्ड्यः । पराजीयते च ॥ ९ ॥

'अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत्'दित्यस्यापवादमाह—

**कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च ।**

कलहे वाग्दण्डपारुष्यात्मके साहसेषु विषशस्त्रादिनिमित्तप्राणव्यापादनादिषु प्रत्यभियोगसंभवे स्वाभियोगमनिस्तीर्याप्यभियोक्तारं प्रत्यभियोजयेत् । नन्वत्रापि पूर्वपक्षानुपमर्दनरूपत्वेनानुत्तरत्वात्प्रत्यभियोगस्य प्रतिज्ञान्तरत्वे युगपद्व्यवहारासंभवः समानः । सत्यम् । नात्र युगपद्व्यवहाराय प्रत्यभियोगोपदेशः, अपितु न्यूनदण्डप्राप्तये अधिकदण्डनिवृत्तये वा । तथाहि । अनेनाहं ताडितः शप्तो वेत्यभियोगे पूर्वमहमनेन ताडितः शप्तो वेति प्रत्यभियोगे दण्डाल्पत्वम् । यथाह नारदः—'पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक् । पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ॥' इति । यदा पुनर्द्वयोर्युगपत्ताडनादिप्रवृत्तिस्तत्राधिकदण्डनिवृत्तिः—'पारुष्ये साहसे वापि युगपत्संप्रवृत्तयोः । विशेषश्चेन्न लभ्येत विनयः स्यात्समस्तयोः ॥' इति । एवं युगपद्व्यवहारप्रवृत्त्यसंभवेऽपि कलहादौ प्रत्यभियोगोऽर्थवानृणादानादिषु तु निरर्थक एव ॥

अर्थिप्रत्यर्थिनोर्विधिमुक्त्वा ससभ्यस्य सभापतेः कर्तव्यमाह—

**उभयः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ॥ १० ॥**

उभयोरर्थिप्रत्यर्थिनोः सर्वेषु विवादेषु निर्णयस्य कार्यं कार्यनिर्णयः । आहिताग्न्यादिषु पाठात्कार्यशब्दस्य पूर्वनिपातः । निर्णयस्य यत्कार्यं च साधितधनदानं दण्डदानं च तस्मिन्समर्थः प्रतिभूः प्रतिभवति तत्कार्यं तद्वद्भवतीति प्रतिभूः ग्राह्यः ससभ्येन सभापतिना । तस्यासंभवेऽर्थिप्रत्यर्थिनो रक्षणे पुरुषा नियोक्तव्याः । तेभ्यश्च ताभ्यां प्रतिदिनं वेतनं देयम् । तथाह कात्यायनः—'अथ चेत्प्रतिभूर्नास्ति कार्ययोगस्तु वादिनः । स रक्षितो दिनस्यान्ते दद्याद्भृत्याय वेतनम् ॥' इति ॥ १० ॥

अर्थिप्रत्यर्थिनोर्निर्णयकार्ये ससभ्येन सभापतिना प्रतिभूर्ग्राह्य इत्युक्तम्, किं तन्निर्णयकार्यं यस्मिन्प्रतिभूर्गृह्यत इत्यपेक्षित आह—

**निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम् ।**
**मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत् ॥ ११ ॥**

अर्थिना निवेदितस्याभियोगस्य प्रत्यर्थिनापह्नवे कृते यद्यर्थिना साक्ष्यादिभि-

---

१ वदन्केवलं. ग. २ दण्डेति प्रत्यभियोक्तुरिति भावः. ३ आक्षारयेत् कायेन वाचा वा क्षीणं कुर्यात्. ४ विनयो दण्डः. ५ पारुष्यं वाग्दण्डादि. ६ एवं उक्तप्रकारद्वयेन. एवं सतीति पाठः. ७ निर्णयस्य कार्यं च ख. ८ प्रतिभूः 'जामिन' इति भाषाप्रसिद्धोऽयम्. ९ तस्य प्रतिभुवः. १० वादिन इति द्वयोरेकशेषः, जातावार्षं वा एकवचनम्. तेनार्थिप्रत्यर्थिनोः समासेन ग्रहणम्. ११ प्रतिभूर्ग्राह्य इत्यत आह ग.

भावितोऽङ्गीकारितः प्रत्यर्थी तदा दद्याद्धनं प्रकृतमर्थिने राज्ञे च [1]तत्सममपलापदण्डम् । अथार्थी [2]भावयितुं न शक्नोति तदा स एव मिथ्याभियोगी जात इत्यभियोगादभियुक्तधनाद्द्विगुणं [3]धनं राज्ञे दद्यात् । प्राङ्न्याये प्रत्यवस्कन्दने चेदमेव योजनीयम् । [4]तत्रार्थ्येवाऽ[5]पह्नववादीति प्रत्यर्थिना [6]भावितो राज्ञे प्रकृतधनसमं दण्डं दद्यात् । अथ प्रत्यर्थी प्राङ्न्यायं कारणं वा भावयितुं न शक्नोति तदा स एव मिथ्या[7]भियोगीति राज्ञे द्विगुणं धनं दद्यात् । अर्थिने च प्रकृतं धनम् । संप्रतिपत्त्युत्तरे तु दण्डाभाव एव । [8]एतच्च ऋणादानविषयमेव । [9]पदान्तरेषु तत्र तत्र दण्डाभिधानाद[10]धनव्यवहारेष्वस्यासंभवाच्च न सर्वविषयम् । 'राज्ञाऽधमर्णिको दाप्यः' इत्यस्य ऋणादानविषयत्वेऽपि तत्रैव विशेषं वक्ष्यामः । यद्वैतदेव सर्वव्यवहारविषयत्वेनापि योजनीयम् । कथम् । अभियोगस्य निह्नवेऽभियुक्तेन कृते यद्यभियोक्ता साक्ष्यादिभिर्भावितोऽभियुक्तस्तदा [11]तत्समं तत्र तत्र प्रतिपदोक्तमेव । चशब्दोऽवधारणे । धनं दण्डं दद्याद्राज्ञ [12]इत्यनुवादः । अथाभियोक्ता अभियोगं वक्तुं न शक्नोति तदा मिथ्याभियोगीति प्रतिपदोक्तं धनं दण्डं द्विगुणं दद्यादिति विधीयते । अत्रापि प्राङ्न्याये प्रत्यवस्कन्दने च पूर्ववदेव योजनीयम् ॥ ११ ॥

ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनमिति वदतोत्तरपादलेखने कालप्रतीक्षणं दर्शितं तत्रापवादमाह—

**साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम् ।**
**विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥ १२ ॥**

साहसं विषशस्त्रादिनिमित्तं प्राणव्यापादनादि । स्तेयं चौर्यम् । पारुष्यं वाग्दण्डपारुष्यं वक्ष्यमाणलक्षणम् । गौर्दोग्ध्री । अभिशापः पातकाभियोगः । अत्ययः [13]प्राणधनातिपातस्तस्मिन् । द्वन्द्वैकवद्भावादेकवचनम् । स्त्रियां कुलस्त्रियां दास्यां च कुलस्त्रियां चारित्रविवादे, दास्यां स्वत्वविवादे । विवादयेदुत्तरं दापयेत् । सद्य एव न कालप्रतीक्षणं कुर्यात् । अन्यत्र विवादान्तरेषु काल उत्तरदानकालः इच्छयार्थिप्रत्यर्थिसभ्यसभापतीनां स्मृत उक्तः ॥ १२ ॥

---

१ प्रकृतधनसममपलापनिमित्तकदण्डम्. २ भावयितुं समर्थयितुम्. ३ धनं दद्याद्राज्ञे ख. ४ तत्राप्यर्थेऽपह्नववादी प्रत्य. ख. ५ अस्मिन्नर्थेऽयं पूर्वं पराजित इति प्राङ्न्यायोत्तरे गृहीतं प्रतिदत्तमिति कारणोत्तरे च दत्ते पूर्वन्यायं प्रतिदानं च प्रतिज्ञावाद्येवापलपतीति सएवापलापवादीत्यर्थः. ६ भावितः जयपराजयरूपप्राङ्न्यायस्य प्रतिदानस्य च साधनादङ्गीकारितो वादी. ७ मिथ्यावादी. ८ निह्नवे भावितो दद्यादित्येतत्. ९ पदान्तराणि द्विविधानि सधनानि अधनानि च । तत्र सधनेष्वाह पदान्तरेष्विति. १० अधनेति । वाग्दण्डपारुष्यादिव्यवहारेषु प्रकृतधनसमदण्डदानस्य तद्द्विगुणदानस्य चासंभवाच्चेत्यर्थः. ११ तत्समं व्यवहारतुल्यम्. १२ अनुवाद इति । तद्व्यवहारे दण्डस्य विशिष्यविहितत्वेन प्राप्तत्वाद्विध्यसंभवेन पूर्वार्धेन तस्य सर्वस्य सामान्येनानुवाद इत्यर्थः. १३ प्रागुक्तनिमित्तान्यनिमित्तकोऽत्र प्राणनाशो ग्राह्यः.

दुष्टलक्षणमाह—

देशाद्देशान्तरं याति सृक्किणी परिलेढि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥ १३ ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं वहु भाषते ।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥ १४ ॥
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः ।
अभियोगे च साक्ष्ये वा दुष्टः स परिकीर्तितः ॥ १५ ॥

मनोवाक्कायकर्मभिर्यः स्वभावादेव न भयादिनिमित्ताद्विकृतिं विकारं याति[1] गच्छति असावभियोगे साक्ष्ये वा[2] दुष्टः परिकीर्तितः । तां विकृतिं विभज्य दर्शयति । देशाद्देशान्तरं याति न क्वचिदवतिष्ठते । सृक्किणी ओष्ठपर्यन्तौ[3] परिलेढि जिह्वाग्रेण स्पर्शयति घट्टयतीति कर्मणो विकृतिः । अस्य ललाटं स्विद्यते स्वेदबिन्द्वङ्कितं भवति, मुखं च वैवर्ण्यं विवर्णत्वं पाण्डुत्वं कृष्णत्वं वा एति गच्छतीति कायस्य विकृतिः । परिशुष्यत्स्खलद्वाक्यः परिशुष्यत्सगद्गदं स्खलद्व्यत्यस्तं वाक्यं यस्य स तथोक्तः । विरुद्धं पूर्वापरविरुद्धं बहु च भाषत इति वाचोविकृतिः । परोक्तां वाचं प्रतिवचनदानेन न पूजयति, चक्षुर्वा प्रतिवीक्षणेन न पूजयतीति मनसो विकृतेर्लिङ्गम् । तथा[4] ओष्ठौ निर्भुजति वक्रयतीत्यपि कायस्य विकृतिः । एतच्च दोषसंभावनामात्रमुच्यते न दोषनिश्चयाय । स्वाभाविकनैमित्तिकविकारयोर्विवेकस्य[5] दुर्ज्ञेयत्वात्[6] । अथ कश्चिन्निपुणमतिर्विवेकं प्रतिपद्येत तथापि न पराजयनिमित्तं कार्यं भवति । नहि मरिष्यतो लिङ्गदर्शनेन मृतकार्यं कुर्वन्ति । एवमस्य पराजयो भविष्यतीति लिङ्गादवगतेऽपि न पराजयनिमित्तकार्यप्रसङ्गः ॥ १३ ॥ १४ ॥ १५ ॥

संदिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत् ।
न चाहूतो वदेत्किंचिद्धीनो दण्ड्यश्च स स्मृतः ॥ १६ ॥

किंच । संदिग्धमर्थमधमर्णेनानङ्गीकृतमेव यः स्वतन्त्रः साधननिरपेक्षः साधयत्यासेधादिना स हीनो दण्ड्यश्च भवति । यश्च स्वयं संप्रतिपन्नं साधनेन वा साधितं याच्यमानो निष्पतेत्पलायते, यश्चाभियुक्तो राज्ञा चाहूतः सदसि न किंचिद्वदति सोऽपि[9] हीनो दण्ड्यश्च स्मृत इति संबध्यते । 'अभियोगे च साक्ष्ये वा दुष्टः स परिकीर्तितः' इति प्रस्तुतत्वाद्धीनपरिज्ञानमात्रमेव माभूदिति दण्ड्यग्रहणम् । दण्ड्यश्चापि 'शास्योऽप्यर्थान्न हीयत' इत्यर्थादहीनत्वदर्शनादत्र तन्माभूदिति हीनग्रहणम् ॥ १६ ॥

---

१ याति गच्छति गच्छति यातीत्यर्थः । श्लोके गच्छेदित्यस्य लिङर्थाविवक्षायां तस्य पूर्वं विवरणं प्रदर्श्य ततो यातीति प्रदर्शनीयम्. २ वा चार्थे. ३ पर्यन्तौ प्रान्तौ. ४ तथा वैवर्ण्यादिवत्. ५ विवेकस्य भेदस्य. ६ दुर्ज्ञानत्वात् ग. ७ यत्किंचिद्विकारात्. ८ ऋणग्राहिणा. ९ द्विविधोऽपीत्यर्थः.

अथ यत्र द्वावपि युगपद्धर्माधिकारिणं प्राप्तौ भाषावादिनौ। तद्यथा। कश्चित्प्रतिग्रहेण क्षेत्रं लब्ध्वा कंचित्कालमुपभुज्य कार्यवशात्सकुटुम्बो देशान्तरं गतः। अन्योऽपि तदेव क्षेत्रं प्रतिग्रहेण लब्ध्वा कंचित्कालमुपभुज्य देशान्तरं गतः। ततो द्वावपि युगपदागत्य मदीयमिदं क्षेत्रं मदीयमिदं क्षेत्रमिति परस्परं विवदमानौ धर्माधिकारिणं प्राप्तौ तत्र कस्य [1]क्रियेत्याकाङ्क्षित आह—

**साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः।**
**पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः॥ १७॥**

उभयतः उभयोरपि वादिनोः साक्षिषु संभवत्सु[2] साक्षिणः पूर्ववादिनः पूर्वस्मिन्काले मया प्रतिग्रहीतमुपभुक्तं चेति यो वदत्यसौ पूर्ववादी न पुनर्यः पूर्वं निवेदयति तस्य साक्षिणः प्रष्टव्याः। यदा त्वन्य[3] एवं वदति सत्यमनेन पूर्वं प्रतिगृहीतमुपभुक्तं च किंतु राज्ञेदमेव क्षेत्रमस्मादेव क्रयेण लब्ध्वा मह्यं दत्तमिति, अनेन वा प्रतिग्रहेण लब्ध्वा मह्यं दत्तमिति तत्र पूर्वपक्षोऽसाध्यतयाऽधरीभूतस्तस्मिन्पूर्वपक्षेऽधरीभूते उत्तरकालं प्रतिगृहीतमुपभुक्तं चेति वादिनः साक्षिणः प्रष्टव्या भवन्ति॥ इदमेव व्याख्यानं युक्ततरम्। मिथ्योत्तरे पूर्ववादिनः साक्षिणो भवन्ति॥ प्राङ्न्यायकारणोक्तौ पूर्वपक्षेऽधरीभूते उत्तरवादिनः साक्षिणो भवन्तीति व्याख्यानमयुक्तम्। अस्यार्थस्य—'ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्' इत्यनेनैवोक्तत्वात्पुनरुक्तिप्रसङ्गात्। पूर्वव्याख्यानमेव स्पष्टीकृतं नारदेन—'मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि। प्राङ्न्यायविधिसिद्धौ तु जयपत्रं क्रिया भवेत्॥' इत्युक्त्वा—'द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु। पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः॥' इति वदता। एतस्य च पूर्वव्यवहारविलक्षणत्वाद्भेदेनोपन्यासः॥ १७॥

**सपणश्चेद्विवादः स्यात्तत्र हीनं तु दापयेत्।**
**दण्डं च स्वपणं चैव धनिने धनमेव च॥ १८॥**

अपिच। यदि विवादो व्यवहारः सपणः पणनं पणस्तेन सह वर्तत इति सपणः स्यात्तदा तत्र तस्मिन्सपणे व्यवहारे हीनं पराजितं पूर्वोक्तं दण्डं स्वकृतं पणं राज्ञे, अर्थिने च विवादास्पदीभूतं धनं दापयेद्राजा। यत्र पुनरेकः कोपावेशवशाद्यद्यहमत्र पराजितो भवामि तदा पणशतं दास्यामीति प्रतिजानीते, अन्यस्तु न किंचित्प्रतिजानीते तत्रापि[13] व्यवहारः प्रवर्तते। तस्मिंश्च प्रवृत्ते पणप्रतिज्ञावादी यदि हीयते तदा स एव सपणं दण्डं दाप्यः। अन्यस्तु पराजितो

---

१ क्रिया साधनम्. २ साक्षिषु सत्सु ग. ३ उक्तपूर्ववादिभिन्नः. ४ स्तस्मिन्पक्षे ग. ५ अर्थी साध्यवान्. ६ मिथ्या मिथ्योत्तरे. ७ पूर्वन्यायकरणनिश्चये तु. ८ पूर्वत्र काले गृहीतमुपभुक्तं चेतीत्यर्थः. ९ सर्वव्यवहार इति पाठस्तत्र प्रागुक्तसर्वेत्यर्थः. १० पणनं व्यवहरणं। स्वोक्तिसत्यतासूचनाय यथासंभवद्रव्यदानाङ्गीकरणमिति यावत्. ११ प्रकृतार्थसममिति निह्नवे भावित इत्यत्रोक्तम्. १२ प्राड्विवाकादिरिति शेषः. १३ तत्र निमित्तसत्त्वादप्रवृत्तौ मानाभावाच्चेति भावः.

दण्डं दाप्यः न पणम् । स्वपणं[1] चेति विशेषोपादानात् । यत्र त्वेकः शतं अन्यस्तु पञ्चशतं प्रतिजानीते तत्रापि पराजये स्वकृतमेव पणं दाप्यौ । सपणश्चेद्विवादः स्यादिति वदता पणरहितोऽपि विवादो दर्शित इति ॥ १८ ॥

**छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।**
**भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ॥ १९ ॥**

किंच । छलं प्रमादाभिहितं निरस्य परित्यज्य भूतेन वस्तुतत्त्वानुसारेण व्यवहारान्नयेदन्तं नृपः । यस्माद्[2]भूतमपि वस्तुतत्त्वमपि अनुपन्यस्तमनभिहितं[3] हीयते हानिमुपगच्छति व्यवहारतो[4] व्यवहारेण साक्ष्यादिभिः । तस्माद्भूतानुसरणं कर्तव्यम् । यथार्थिप्रत्यर्थिनौ सत्यमेव वदतस्तथा ससभ्येन सभापतिना यतितव्यं सामादिभिरुपायैः । तथासति साक्ष्यादिनैरपेक्ष्येणैव निर्णयो भवति ॥ अथ सर्वथापि भूतानुसरणं न शक्यते कर्तुं तथा सति साक्ष्यादिभिर्निर्णयः कार्य इत्यनुकल्पः । **यथोक्तम्**—'भूतच्छलानुसारित्वाद्द्विगतिः[5] समुदाहृतः । भूतं तत्त्वार्थसंयुक्तं[6] प्रमादाभिहितं छलम् ॥' इति । तत्र भूतानुसारी व्यवहारो मुख्यः छलानुसारी त्वनुकल्पः । साक्षिलेख्यादिभिर्व्यवहारनिर्णये कदाचिद्धस्त्वनुसरणं भवति कदाचिन्न भवति । साक्ष्यादीनां व्यभिचारस्यापि[7] संभवात् ॥ १९ ॥

भूतमप्यनुपन्यस्तं हीयते व्यवहारत इत्यत्रोदाहरणमाह—

**निह्नुते लिखितं नैकमेकदेशे विभावितः ।**
**दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः ॥ २० ॥**

नैकमनेकं सुवर्णरजतवस्त्रादि लिखितमभियुक्तमर्थिना[8] प्रत्यर्थी यदि सर्वमेव निह्नुतेऽपजानीते तदार्थिनैकदेशे[9] हिरण्ये साक्ष्यादिभिः प्रत्यर्थी भावितोऽङ्गीकारितः सर्वं रजताद्यर्थं पूर्वलिखितं दाप्योऽर्थिने नृपेण । न ग्राह्यस्त्वनिवेदितः पूर्वं भाषाकाले अनिवेदितः पश्चादर्थिना पूर्वं मया विस्मृत इति निवेद्यमानो न ग्राह्यो न दापयितव्यो नृपेण । एतच्च न केवलं वाचनिकम्[10] । एकदेशे प्रत्यर्थिनो मिथ्यावादित्वनिश्चयादेकदेशान्तरेऽपि मिथ्यावादित्वसंभवात् । अर्थिनश्चैकदेशे सत्यवादित्वनिश्चयादेकदेशान्तरेऽपि सत्यवादित्वसंभवात् । एवं तर्कापरनामसंभावनाप्रत्ययानुगृहीतादस्मादेव[11] योगीश्वरवचनात्सर्वं दापनीयं नृपेणेति निर्णयः । एवं[12] च तर्कवाक्यानुसारेण निर्णये क्रियमाणे वस्तुनोऽन्यथात्वेऽपि व्यवहारदर्शिनां न दोषः । **तथाच गौतमः**—'न्यायाधिगमे[13] तर्कोऽभ्युपायस्ते-

१ सपणं ख. २ तस्मात् ख. ३ अनभिहितं अर्थिप्रत्यर्थ्यन्तरेण. ४ व्यवहारतः हीयमानपापयोगाच्चेति करणतृतीयान्तात्तसिः. ५ भूतच्छले अनुसरति तच्छीलस्तत्त्वात् द्विगतिर्द्विप्रकारः. ६ तत्त्वार्थयुक्तं यत्प्रमादाभि. ख. ७ व्यभिचारस्य अयथार्थवादित्वस्यापि. ८ प्रतिज्ञाकालेऽर्थिनाऽभियोगत्वेनाभिहितम्. ९ पूर्वोक्तार्थैकदेशहिरण्यविषये. १० किंतु युक्तिसिद्धमपीति भावः. ११ तर्कापरनामिका या संभावना सैव यः प्रत्ययो ज्ञानं तत्सहकृतात् 'निह्नुते' इति योगीश्वरवचनादित्यर्थः. १२ अस्य तदनुगृहीतत्वे च. १३ न्यायज्ञाने तर्क उपायस्तेन तर्केण न्यायमभ्युह्य निश्चित्य. नाभ्युपेत्य ख.

